क्रव्यादः श्येनादयः । दस्यवो व्याधाः* ।

मक्षिका विप्रुषश्छाया गौरश्वः सूर्य्यरश्मयः ।

रजो भूर्वायुरग्निश्च स्पर्शे मेध्यानि निर्दिशेत् ॥

मक्षिकाग्रहणम्†अवर्ज्जनीयस्पर्शानां दंशादीनामुपलक्षणार्थम् । विप्रुषः अविज्ञाताकाराः‡ । छाया निषिद्धातिरिक्ता रजोऽपि निषिद्धेतरत् ।

त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् ।

अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ॥

एतच्चोपघातसन्देहे विज्ञेयम् ।

शङ्खः ।

नारीणाञ्चैव वत्सानां शकुनीनां शुनो मुखम् ।

रतौ प्रस्रवणे वृक्षे मृगयायां§ सदा शुचिः ॥

यमः ।

मुखतो गौरमेध्या तु मेध्योऽजो¶ मुखतस्तथा ।

पृष्ठतो गौर्गजः स्कन्धे सर्व्वतोऽश्वः शुचिस्तथा ॥

अदूष्यं काञ्चनङ्गावः स्त्रीमुखं कुतपङ्कुरम् ।

न दूषयन्ति विद्वांसो यज्ञेषु चमसं तथा ॥

---

* दस्युर्विन्नः वकः इति पाठान्तरम् । † मक्षिकाग्रहणमतिवर्त्तनीयस्पर्शादीनामुपलक्षणार्थमिति पाठान्तरम् । ‡ वेदपाठकालीनच्युतमुखामृतविन्दव इति शेषः विप्रुषोऽम्बुविन्दव इत्यमरः । § रतिकाले स्त्रीमुखं शुचि स्तनात्पयःप्रस्रवणकाले वत्समुखं वृक्षे वृक्षस्थफलभक्षणे पक्षिमुखं शुचि मृगयाकाले मृगदंशने कुक्कुरमुखं शुचि इत्यर्थः ।

¶ छागः ।

काञ्चनस्यालङ्करणीभूतस्य स्वेदादिदोषाभावप्रतिपादनपरम् । उच्छिष्टाद्युपहतस्य शुद्ध्यभिधानात् ।

आकराः शुचयः सर्व्वे शकुनिः फलपातने ।
श्वा मृगग्रहणे मेध्यः स्त्रीमुखेषु च वारुणी ॥

आकराः सुराकरव्यतिरिक्ताः । आकराः शुचयः सर्व्वे वर्ज्जयित्वा सुराकरमिति पैठीनसिस्मरणात् । ब्राह्मणभार्य्याया अपि शूद्रायाः पीतमद्याया बुद्धिपूर्व्वकं गन्धरसास्वादनरहितं मुखं रतिसंसर्गे शुद्धमेवेत्यर्थः ।

दधि सर्पिः पयः क्षौद्रं भाण्डे दोषो न विद्यते ।
मार्ज्जारश्चैव दर्व्वी च मारुतश्च सदा शुचिः ॥

मार्ज्जारस्य स्पर्शे शुद्धत्वमेवेत्यर्थः । अशुचित्वं कर्म्मकालादन्यत्र तत्र स्नानविधानात् ।

अत्रिः ।

मधुपर्क्के च सोमे च अप्सु प्राणाहुतीषु च ।
नोच्छिष्टस्य भवेद्दोषस्त्वत्रेश्च वचनं यथा ॥

अप्सु भोजनानन्तरममृतापिधानमसीति अग्नीकरणार्थं या आपो गृह्यन्ते ताः मधुपर्काद्युच्छिष्टस्य सर्व्वाचारविषयम् ।

बृहस्पतिः ।

पादौ शुची ब्राह्मणानामजाश्वस्य मुखं शुचिः ।
गवां पृष्ठानि मेध्यानि सर्व्वगात्राणि योषिताम् ॥

उपहतिरहितब्राह्मणचरणस्पृष्टं वस्तु शुद्धमित्यर्थः । एवञ्च ब्राह्मणव्यतिरिक्तचरणस्पर्शो दोषावह इत्युक्तम्भवति ।

अदुष्टा सन्तता धारा वातोद्धृताश्च रेणवः ।
स्त्रियो वृद्धाश्च बालाश्च न दुष्यन्ति कदाचन ॥

षट्त्रिंशन्मते ।

ताम्बूले च फले चैव भुक्तस्नेहावशिष्टके ।
दन्तलग्नस्य संस्पर्शे नोच्छिष्टस्तु भवेन्नरः ॥

दन्तलग्ने तु विशेषो भोजनप्रकरणेऽभिहितः ।

अत्रिः ।

पत्रैर्मूलफलैः पुष्पैस्तृणकाष्ठमयैस्तथा ।
सुगन्धिभिस्तथा द्रव्यैर्नोच्छिष्टस्तु भवेद्द्विजः ॥

याज्ञवल्क्यः ।

मुखजा विप्रुषो मेध्यास्तथाचमनविन्दवः ।
श्मश्रु चास्यगतं दन्तसक्तं त्यक्त्वा ततः शुचिः ॥

मुखजाः विप्रुषः श्लेष्मविन्दवो मुखान्निर्गता आचमनप्रापका न भवन्ति ।

अत्र विशेषमाह गौतमः ।

न मुख्याः* विप्रुष उच्छिष्टं कुर्व्वन्ति चेदङ्गे निपतन्तीति ।

वृहस्पतिः ।

द्राक्षेक्षुयन्त्राकरकारुहस्ता-
गोदोहनीयन्त्रविनिःसृतानि ।
बालैरथ स्त्रीभिरनुष्ठितानि
प्रत्यक्षदुष्टानि शुचीनि तानि ॥

---

* मुख्याया इति पाठान्तरम् ।

यत्र विनिःसृतानि इक्षुरसादीनि बालैः स्त्रीभिश्च कृतानि रथ्याप्रसर्पणादिभिर्निमित्तैर्यत्राचमनप्राप्तिस्तत्राचमनमकृत्वापि, यान्यप्यवसुस्पर्शपाकादीनि कृतानि तानि प्रत्यक्षतो दृष्टानि* अशुचिभिः कृतानीति ज्ञातान्यपि शुद्धानीत्यर्थः।

इह मदनपारिजाते मदनक्षितिपालदानजलरूढे।
स्तबको हि षष्ठ आसीदामोदाकृष्टपण्डितभ्रमरः॥

मतिर्येषां शास्त्रे प्रकृतिरमणीया व्यवहृतिः
परं शीलं श्लाघ्यं जगति ऋजवस्ते कतिपये।
चिरं चित्ते तेषां मुकुरतलभूते स्थितिमियात्
इयं व्यासारण्यप्रवरमुनिशिष्यस्य भणितिः॥

इति पण्डितपारिजातभट्टारमल्लेत्यादिविरुदराजी-
विराजमानस्य श्रीमदनपालस्य निबन्धे मदन-
पारिजाताभिधेये षष्ठः स्तबकः।

---

* दृष्टानीति क्वचित्पाठः।